# ॥ अद्वैतोपनिषत् ॥

ॐ अद्वैतपुरुषस्य न द्वितीयो भेदोऽस्ति । स्थिरजङ्गममध्ये अद्वैतं ब्रह्म प्रकाशितम् । सर्वलोकमध्ये ब्रह्म द्विधारूपं विचरति । चैतन्यचित्तेजसः अन्तरात्मा । मध्ये कैवल्यात्मा । एकैकं यथा रवितेजः रविर्भवेत् तथा अखण्डितब्रह्म मायाजगत्त्रयं अवस्थात्रयं परमात्मनः एकं भवति । या बुद्धिर्गर्भमध्ये सा बुद्धिर्बाल्यावस्था न भवति । या बुद्धिर्बाल्यावस्था भवति सा बुद्धियौवनावस्था न भवति । या बुद्धिर्यौवनावस्था सा बुद्धिर्यूनावस्था न भवति । जरावस्था कालसम्प्रीकामेवधर्मक्रीयते (?) कारणं तत्त्वज्ञानं भवति । ज्ञानप्रबोधो यस्मिन्मध्ये मायामोहं परित्यज्य सर्वकर्मविनिर्मुक्तः स शब्दातीतोऽपि जायते । अथेतोऽपि अद्वैतपुरुषस्य पूर्णं ब्रह्म प्रतिभासितम् । यथा नदी जायते सागर एकोऽपि सागरप्रतिभासितः तथा ब्रह्म सर्वान्तरात्मा मध्ये प्रकाशितम् । नाप्रसं सम्पुटं (?) सत्त्वरजस्तमोगुणरहितं तत्त्वं चेति । यथा योगी वायुनिरोधनं उक्ताचरणगुरुराछिनोति किल्बिषम् । सर्वदिव्यदेहमध्ये परमात्मा प्रकाशितः विनिर्मुक्तभवसागरः स्वर्गे देवमध्ये उत्तमस्वल्पस्य बुद्धिप्रकाशः अस्मिन्मध्ये मायामोहं परित्यजेत् । प्रकाशमध्ये माया करोति । तैलमध्ये यथा यथा मक्षिका एकदेहिमध्ये ब्रह्म दशधा रूपं विचरति । चक्षुःप्राणमनोबुद्धिपञ्चेन्द्रियाणि पञ्चतत्त्वानि तथा घटघटमध्ये बहुचन्द्रोऽपि दृश्यते प्रकाशितः सर्वलोकमध्ये ब्रह्मणो रूपं विचरति तथा घटघटमध्ये बहुचन्द्रोऽपि दृश्यते । अद्वैतं कथितं येन पुरुषोऽमूढो भवति । देवासुरमुनिमनुष्याणां अधः ऊर्ध्वं चतुर्दिशम् । भुवर्णायुदेवादाव्यदेहितेरसकारो दृश्यते रसकाराकारमध्ये भवति निराकारः अकारउकारमध्ये ब्रह्म परिपूर्णं सत्यसत्यं वेदवाक्यं वेदशास्त्रप्रतिभासितं कैवल्यं द्वैताद्वैतरहितं मनोमय आनन्दमयतत्त्वमयतेजोमयसर्वमयः विष्णुवृक्षफलं उत्पन्नं परमहंसपूर्णोऽपि जायते । ज्ञानं माता विज्ञानं पिता सगुणब्रह्म निर्गुणब्रह्मार्पितं अष्टमी च निर्गुणावस्था ब्रह्म शरीरज्ञानलहरी ब्रह्मणः । ब्रह्मणो यज्ञोपवीतमनिष्टं गम्भीरग्रहे क्षेमसर्ववैराग्यप्रभावेन सन्तोषलाभसमस्तगुणोऽपि जायते । परमहंसपुरुषस्य द्वितीयं भेदं यथा जलरहिते भिन्नं प्राणप्रीतेयन् (?) । द्वितीयवस्तुरहितः अखण्डितं वस्तु मध्ये प्रविष्टं अर्धस्थाने अर्धमृचस्थाने आत्मा दृश्यते आत्मव्यापकं ब्रह्मज्ञानविज्ञानम् ॥

इति अद्वैतोपनिषत् सम्पूर्णा ।